विभागमर्हिष्यम् । उदाहरणम्——बंगालप्रान्तीयस्यैकस्य गृहस्थस्य दत्तकग्रहणादनन्तरं द्वावौरसपुत्रावुत्पन्नौ चेत् समग्रपितृधनस्य समान् सप्तविभागान् प्रकल्प्य तन्मध्ये (१/७) एकः सप्तमांशो दत्तकेन ग्राह्यः । अवशिष्टानां षण्णां सप्तमांशानां मध्ये प्रत्येकमौरसेन (३/७) (३/७) त्रयस्त्रयः सप्तमांशा ग्राह्याः । एवंप्रकारिका द्रव्यविभक्तिर्जायेत । मोहमयीमध्ये यद्ययं निरुक्तः प्रकारो घटित्वाऽऽगतश्चेत् । (१/११) एक एकादशांशो दत्तकाय दत्त्वा द्वाभ्यामौरसाभ्यां प्रत्येकं पञ्च पञ्च एकादशांशाः ( ५/११, ५/११ ) ग्राह्या भवेयुः । सोऽयं सर्वो धनव्यवस्थाविचारः १९३८ सनीयात् हिन्दुस्त्रीणां धनग्रहणाधिकारविषयकाद्राजनियमप्रबन्धात् प्राक्कालिकत्वेन संजातः । तादृशनियमप्रबन्धस्य राजसंमतिलाभादनन्तरमिदानीमत्र विषये बहवो विशेषाः प्रकल्प्याः स्युः । तेषां सामान्यतः स्वरूपं यथा——तादृशनियमप्रबन्धस्य राजसंमतिप्राप्त्यनन्तरमधुना हिन्दुस्त्रीणां पुत्रसद्भावेऽपि पत्युर्धनविषये पुत्रसमाः, यावत्पुत्राधिकारं पुत्राभावे भर्तृसमा यावद्भर्त्रधिकारमधिकारा अदायिषत । ततश्च यद्येकेन केनचिदहमपुत्रोऽस्मीति मत्वा दत्तको गृहीतस्तर्हि प्रतिग्रहीतृमरणानन्तरं सर्वं तद्धनं दत्तकपुत्रस्य न लब्धं भविष्यति । अपि त्वर्धं धनं दत्तकस्यार्धं च भार्याया लब्धं भविष्यतीत्यर्थः । यद्यनेका भार्याः स्युस्तदा तदर्धं द्रव्यं समं विभज्य सर्वाभिर्ग्राह्यम् । सोऽयमधिकार इतरेषां स्वसंबन्धिनां धनग्रहणविषये नास्तीत्यतो यदि दत्तकस्य प्रतिग्रहीतृभ्रातुः सकाशाद्दायविभागो लभ्येत तर्हि तादृशधने विधवाया मातुर्न कियानप्यधिकारः ।

सोऽयमीदृशोऽधिकारो राजन्यायालयप्रणीतनियमानुसारेण न केवलं पुरुषस्यैव विधवाया स्त्रिया दत्तोऽपि तु तदीयमृतपुत्रस्य विधवायाः स्त्रियाः, मृतपौत्रस्य विधवास्त्रियाश्च दत्तोऽस्ति । ततश्च तेषां धनग्रहणाधिकारा अपि विचारेऽवश्यं ग्राह्याः स्युः । तथैव दत्तकग्रहणानन्तरमौरस उत्पन्ने सति दत्तकस्य धनग्रहणाधिकारा न्यूनी भवन्ति । प्रतिग्रहीतुर्विधवा स्त्री जीवन्ती स्याच्चेत्तदधिकाराणां यावत्पुत्राधिकारत्वनियमाद्दत्तकपुत्रस्याधिकाराः पूर्वापेक्षयाऽप्यधिकं न्यूनी भवेयुरिति स्पष्टमस्ति ।

दत्तकपुत्रः समानश्चेत्तेन सह कंचिन्नियमबन्धं कृत्वा प्रतिग्रहीत्रा दत्तकी भ-

विषयतः पुत्रस्य धनग्रहणसंबन्धो नोत्पत्स्यमानाधिकारविषये यथेष्टं न्यूनाधिक्यं कर्तुं शक्यम् ( काशीबाई वि० तात्या ४० मुंबई ६६८ ) । कस्मिंश्चिदेकस्मिन् विवादे प्रिव्हीकौन्सिलाख्यसर्वश्रेष्ठन्यायालयेनैवमपि गृहीतं धृतम्--दत्तकी भविष्यन् पुत्रोऽज्ञानी चेज्जनककुलीयेन तत्पालकेन दत्तकस्य ग्राहकेण ग्राहिकया वा समं नियमबन्धं कृत्वा दत्तकस्य ग्राहिकाया ग्राहकपुरुषस्य भार्याया वा जीवनकालपर्यन्तं सर्वधनादेरुपभोगस्तया स्त्रिया ग्रहीतव्यः पश्चाच्च दत्तकेन तदुपभोक्तव्यम्, इत्येवं प्रतिग्रहीतृकुलीयधन उत्पत्स्यमाना दत्तकस्याधिकारा मर्यादिताः कर्तुं शक्यन्ते । एतदपेक्षया, अज्ञानिनो दत्तकपुत्रस्य धनग्रहणविषयका अधिकारा जनककुलीयपालकस्य मर्यादिताः कर्तुमशक्याः ( कृष्णमूर्ति वि० कृष्णमूर्ति ५१ इं० अ० २४८ )।

| पृ० | प० | सा० | प्रतीकम् |
|---|---|---|---|
| १८३ | ६ | (३९) | तस्मादत्र दत्तके न प्रतिग्रहीतृसापिण्ड्यं किंतु जनककुल एव साप्तपौरुषं सापिण्ड्यमिति सिद्धमिति । |
| १०२ | ७ | (४०) | यदिदमुभयत्र त्रिपुरुषसापिण्ड्याभिधानं तद्व्यामुष्यायणाभिप्रायेण । तस्य त्रिकद्वयेन सह सपिण्डीकरणाभिधानात् । शुद्धदत्तकस्य तु प्रतिग्रहीतृकुले त्रिपुरुषं पिण्डान्वयरूपं सापिण्ड्यं जनककुलेऽवयवान्वयरूपमेवेत्यलं प्रपञ्चेनेति । |
| २१४ | ७ | (४१) | दत्तकादीनां मातामहा अपि प्रतिग्रहीत्री या माता तत्पितर एव पितृन्यायस्य मातामहेष्वपि समानत्वादिति। |

न्यायालयानां सापिण्ड्यविचारप्रसङ्गोऽतीवाल्पवारं प्राप्नोति । दत्तकपुत्रोऽयं प्रतिग्रहीतृकुलगत एको घटकावयवः संपन्न इति हेतोस्तस्य प्रतिग्रहीतृगोत्रं प्राप्नोति । इदं पूर्वमुक्तम् । सापिण्ड्यं तु द्विप्रकारकं भवति । तत्रैकं शरीरसंबन्धाद्द्वितीयं पिण्डसंबन्धादुत्पद्यते । प्रथमप्रकारकं सापिण्ड्यं साप्तपौरुषं द्वितीयं तु त्रिपुरुषं भवति दत्तकपुत्रशरीरारम्भस्य जनककुलाज्जातत्वेन जनककुले तस्य साप्तपौरुषं सापिण्ड्यं भवति । यद्यपि स पुत्रो दत्तकत्वं प्राप्तस्तथाऽपि तत्सापिण्ड्यस्य निवृत्तिर्भवितुं न शक्नोति । तेन जनककुलीयसपिण्डकन्यया सह तेन स्वविवाहः कर्तुमशक्यः । तथैव जनककुलेऽवस्थितौ सत्यां यः पुत्रस्तस्य विरुद्धसंबन्धादिकारणेन दत्तकत्वेनाग्राह्यः स पुत्रः प्रतिग्रहीतृकुलप्रविष्टस्यापि तस्य दत्तकत्वेनाग्राह्य एव भवति । (मूदिया वि० अप्पन् १८५८ मद्रास सदर ११७) । दत्तकत्वेन

पालककुले प्रवेशेन तस्य जनककुले कस्मा अपि पिण्डो न दातव्यो भवतीति हेतोः पिण्डान्वयरूपं त्रिपुरुषसापिण्ड्यं निवृत्तं भवति । परमिदं त्रिपुरुषसापिण्ड्यं तस्य प्रतिग्रहीतृकुले प्राप्नोति । तेन हेतुना त्रिपुरुषादनन्तरपुरुषादुत्पन्नां भिन्नगोत्रीयां कन्यां परिणेतुं दत्तकपुत्रः शक्नुयात् । प्रतिग्रहीत्र्या मातुः पितामहप्रपितामहा एव दत्तकेन मातामहमातुःपितामहमातुःप्रपितामहत्वेन ग्राह्याः । एतत्संबन्धेन विवेचनं पूर्वं कृतमेव । ( सापिण्ड्यसंबन्धेनाधिकविस्तृतविवेचनं मञ्जर्याख्यायां द्रष्टव्यम् ) ।

| पृ० | पं० | सा० | प्रतीकम् |
|---|---|---|---|
| २२३ | ४ | (४२) | औरसपुत्रस्यैवौरसपुत्र्या अप्यपचारे क्षेत्रजाद्याः पुत्र्यः प्रतिनिधयो भवन्ति । मुख्यापचारे प्रतिनिधिरिति न्यायादिति । |

औरसकन्याया अभावे क्षेत्रजाद्या गौणदुहितरस्तत्प्रतिनिधित्वेन ग्राह्या इतीदं नन्दपण्डितैरुक्तम् । एतदुपोद्बलकत्वेन दत्तक्रीतकृत्रिमादिदुहितॄणां पुराणस्थान्युदाहरणानि प्रदर्शितानि । परंतु भूमिकायां प्रदर्शितरीत्या पुत्रस्यैव प्रतिनिधिः संभवति न दुहितुः । यतो दुहितृत्पत्तिविषये नित्यविधिः क्वाप्युक्तो न दृश्यते । तथैव 'दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः' इति वचने विधस्य यदि दत्तकादृते पुत्रप्रतिनिधिर्भवितुं नार्हति तर्हि सर्वप्रकारिका दुहितरः प्रतिनिधित्वेन स्वीकार्या भवन्तीति वचनं न सामीचीन्यमावहति । किंच दत्तकपरिग्रहविधिवद्दत्तकदुहितृपरिग्रहविधिः क्वापि न प्रतिपादितः । प्रत्युत भूमिकायां प्रदर्शितरीत्या भिन्नभिन्नानि दुहितृप्रतिनिध्युदाहरणानि पुनरिदमेव दर्शयन्ति–असरक्षितानामनाथानां कान्यानां पुत्राणां वा रक्षणसंवर्धने भवेतां तथा दुर्दैवानीमान्यपत्यानि स्वयौवनदशायां समाजकार्याणि सामीचीन्येन संपादयितुं प्रभवेयुरित्यतस्तेषां पालनादिव्यवस्थावश्यकता भिन्नभिन्नमार्गैः समाजगतेषु कन्यापुत्रापेक्षिषु समर्थपुरुषेषु शास्त्रेण निक्षिप्ता । औरसपुत्राभावे योऽयमाहत्य पुत्रप्रतिनिधिः कर्तव्यो भवति स केवलं क्षेत्रज, पुत्रिका, पुत्रिकापुत्र, दत्तकष्वेव करणीयः । एतस्मिन् कलियुगे तु स केवलं दत्तकविधानेनैवानुष्ठेयः । एतद्विषये क्रीतापविद्धस्वयंदत्तकानीनपौनर्भवगूढजसहोढप्रभृतिपुत्राणां कियानप्युपयोगो नास्ति । दुहितॄणां पुनर्नास्त्येव नास्ति ।